तत्र प्रजापतेर्नव काण्डानि - पौरोडाशिकम्, याजमानम्, होतारः, इष्टिहौत्रम्, चतुर्णां ब्राह्मणानि, पितृमेधश्चेति । सोमस्य नव काण्डानि -- [३१]अध्वरग्रहदक्षिणानि, तेषां त्रयाणां ब्राह्मणमेकम्, वाजपेयः, तस्य च ब्राह्मणम्, सत्राः, शुक्रीयं "नमो वाचे" (तैआ ४·१) इत्यादिकम्, तस्य च ब्राह्मणमिति ॥ [३२]अग्नेः सप्त काण्डानि—अग्न्याधेयम्, पुनराधेयम्, अग्न्युपस्थानम्, अग्निः, तस्य च ब्राह्मणं "सावित्राणि जुहोति" (तैसं ५·१·१) इत्यादि, तस्यैव द्वितीयं ब्राह्मणं "यदेकेन" (तैसं ५·५·१) इत्यादि, अग्निहोत्रब्राह्मणमिति । अथ विश्वेषां देवानां षोडश काण्डानि— राजसूयः, तस्य च ब्राह्मणम्, काम्याः पशवः, काम्या इष्टयः, उपानुवाक्यं "प्रजापतिरकामयत" (तैसं ३·१·१) इति प्रश्नपञ्चकं, याज्याः,

र्चीन्द्रियाणां नरः पतनमृच्छति" ॥ (याज्ञ ३·२१९) इति । यावज्जीवादिवाक्यैरवमुक्तोऽप्य- वर्जनीयतया स्वाधीनः स्वर्गः प्राप्यते । तथा चाऽऽपस्तम्बः—'तद्यथाऽऽम्रे फलार्थे[६५] निर्मिते[६६] [६७]छाया गन्ध इत्यनूत्पद्येते[६७] एवं [६८]धर्मं चर्यमाणमर्था[६८] अनूत्पद्यन्ते" [आपधसू 1-२०·३] इति । काम्यस्य इष्टप्राप्तिहेतुत्वं[६९] तद्विधिवाक्ये [७०]एव स्पष्टम्[७०] । [७१]इच्छाविघातलक्षणम् अनिष्टं चार्थात् परिहियते । [७२]निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठानजन्यो नरकपातः[७२] परिहियते । न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः किं तु धीशुद्ध्या विविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति । तथा च वाजसनेयिनः समामनन्ति—" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृउ ४·४·२२) इति । एवं तर्हि पूर्वकाण्ड एवाशेषपुरुषार्थसिद्धेः कृतमुत्तरकाण्डेनेति चेत् । न । अपुनरावृत्तिलक्षणस्याऽऽत्यन्तिकपुरुषार्थस्य तत्रासिद्धेः । अत एवाऽऽथर्वणिकाः कर्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चाऽऽमनन्ति—" स सोमलोके विभूतिमनुभूय पुनरावर्तते" (प्रउ ५·४) इति । अत उत्तरकाण्डस्तदर्थको[७३] द्रष्टव्यः[७४] । [७५]आत्यन्तिकपुरुषार्थसिद्धिश्च द्विविधा[७६] सद्योमुक्तिः क्रममुक्तिश्चेति । वर्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः । उत्तरमार्गेण गत्वा[७७] ब्रह्मलोके चिरं भोगाननुभूय तत्रोत्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः ॥ तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते । ब्रह्मोपास्तिप्रसङ्गात्[७८] ब्रह्मदृष्ट्या प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते । ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे

३१. तं१. तं२. तं३. ति. पं. म. म१. मै४ – अध्वरो ग्रहा दक्षिणानि । ३२. मै. मै४ – अथाग्नेः ।

६५. त्रि१. त्रि२. त्रि३. ब– 'फलार्थे' नास्ति । ६६. आ–निमिते । ६७–६७. आ– छायागन्धावनूत्पद्येते; गो. त्रि१. त्रि३. ह्रा – छाया गन्ध इत्यनूत्पद्यते; इ. उ. पा. ब – छायागन्ध इत्यनूत्पद्यन्ते । ६८–६८. आ. पा–धर्ममपि चर्यमाणमर्थाः; त्रि२. ब–धर्मं चर्यमाणमर्थकामाः; क. ह्रा–धर्मेऽपि चर्यमाणे अर्थाः । ६९. आ. इ. उ. पा. ह्रा – इष्टफलहेतुत्वम् । ७०–७०. आ. इ. उ. पा. ह्रा – स्पष्टमेव । ७१. आ. इ. ब. ह्रा – इष्टविघातरूपम्; अ. म३ – इष्टविघातलक्षणम्; पा – इच्छाविघातरूपम्; क – इष्टविघातम् । ७२–७२. आ. इ. उ. पा – निषिद्धवर्जनाच्च रागप्राप्तानुष्ठानजन्यो नरकः । ७३. अ.क.त्रि१. त्रि२. त्रि३. ब. म३– 'तदर्थको' नास्ति । ७४. त्रि१. त्रि२. त्रि. ३ ब – ज्ञातव्यः; अ. क. म३ – आरब्धव्यः । ७५. इ. उ. पा. ह्रा– अत्यन्तपुरुषार्थश्च; आ – °पुरुषार्थश्च । ७६. आ. इ. पा. ह्रा– द्विविधः । ७७. क, तं. त्रि१. त्रि२. त्रि. ३ ब. म. ३. मै१ – 'गत्वा' नास्ति । ७८. आ. पा– °प्रसङ्गेन ।

अश्वमेधः, तस्य च ब्राह्मणम्, सत्राणि, उपहोमाः, सूक्तानि, नक्षत्रेष्टयः, सौत्रामणिः, अच्छिद्राणि, पशुहौत्रम्, [33]पुरुषमेध इति। सांहितीनामुपनिषदां सांहित्य उपनिषदः "शं नो मित्रः" (तैआ ७.१.१) इत्यादीनाम्। याज्ञिकीनामुपनिषदां याज्ञिक्यः "अम्भस्यपारे" (तैआ १०.१.१) इत्यादीनाम्। वारुणीनां वारुण्यः "सह नाववतु" (तैआ ८.२.१) इत्यादीनाम्। इत्येवं तित्तिरिशाखायाः चतुश्चत्वारिंशत् काण्डानि। अथ काठके काण्डान्यष्टौ [34]हव्यवाडादीनाम्। अत्र[35] हव्यवाहः[36] चत्वारि काण्डानि— सावित्रचित्यम्, नाचिकेतचित्यम्, चातुर्होत्र-

प्रतीकोपासकस्य विद्युल्लोकादूर्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्त्यसम्भवात् अस्ति पुनरावृत्तिः। एतच्च "अप्रतीकालम्बनान्नयति°" (ब्रसू ४.३.१५) इत्यधिकरणे स्पष्टम्॥

ननु अस्त्वेवं पूर्वोत्तरकाण्डयोः विषयविशेषः प्रयोजनविशेषश्च[80], तथापि पूर्वकाण्डस्थाऽऽद्यौ कर्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत्। प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः। प्रकर्षेणाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। कृत्स्नाङ्गविधानस्योपदेशस्य प्रकर्षः। विकृतिषु तु [81]विशेषाङ्गमात्रस्योपदेशः क्रियते। अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते। अत उपदेशस्य[82] प्रकर्षाभावः। प्रकृतिस्त्रिविधा अग्निहोत्रमिष्टिः सोमश्चेति। त्रिष्वप्येतेषु अन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम्[83]। तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु दर्शपूर्णमासेष्टिसापेक्षत्वात्[84] न पूर्वभावित्वं युक्तम्। इष्टेस्तु सोमयागनैरपेक्ष्यात्[85] सोमात् प्राचीनत्वं युक्तम्। अग्निहोत्रस्य स्वरूपेऽङ्गेषु [86]च नास्त्यन्यापेक्षा,[86] तथाप्यग्निसिद्ध्यपेक्षत्वात्, आहवनीयादीनां च [87]पवमानेष्टिसाध्यत्वात्, [88]पवमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाऽग्निहोत्रस्य दर्शपूर्णमासापेक्षाऽस्तीति प्रथमभावित्वं न[89] युक्तम्। [90]दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकस्याधानस्य प्रथमतो वक्तव्यमिति चेत्। नैवम्[91]। आधानमात्रेणाग्नयः सिध्यन्ति किन्तु पवमानेष्टिभिरपि। ताश्चेष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव[92] दर्शपूर्णमासावपेक्षन्ते। दर्शपूर्णमासौ त्वग्निद्वारा[93] पवमानेष्टिसापेक्षावपि न साक्षात् पवमानेष्टीरपेक्षेते। अतो निरपेक्षत्वात् दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या। [illegible]-

३३. मै. मै१ – नरमेधः। ३४. मै१ – हव्यवाहनादीनाम्। ३५. मै. मै१. मै४ – तत्र। ३६. पं. ब. मै१. मै४ – हव्यवाहनस्य।

७९. आ. इ. क. पा. हा – °स्यासिद्धत्वात्; त्रि१. त्रि२. त्रि३. ब. म१. म३ – °स्याभावात्। ८०. गो – तत्रारोपितः प्रयोजनविशेषश्च; त्रि१. त्रि२. त्रि३. ब – तत्र तत्रोचितः प्रयोजनविशेषश्च; अ. अ१. क. म३ – तत्र तत्र उचितप्रयोजनविशेषश्च। ८१. आ. इ. उ. पा – विशेषाङ्गोपदेश एव; त्रि१. त्रि२. ब – विशेषाङ्गमात्रस्योपदेशः। ८२. आ. इ. उ – अतिदेशस्य। ८३. तं. म१ – सर्वमुद्दिष्टम्; त्रि१. त्रि२. त्रि३. ब – समुद्दिष्टम्। ८४. आ – दर्शपूर्णमासापेक्षत्वात्; इ. उ. पा. हा – दर्शपूर्णमाससापेक्षत्वात्। ८५. आ. इ. उ. पा – °निरपेक्षत्वात्। ८६–८६. आ. इ. उ. पा – वा नान्यापेक्षा; त्रि१ – नान्यापेक्षा; म१ – वा नास्त्यन्यापेक्षा; गो – वा नास्त्यन्यापेक्षा; अ. म३ – च नास्त्यपेक्षा। ८७. आ. पा – पावमानेष्टि°। ८८. आ. पा – पावमानेष्टीनाम्। ८९. इ. गो. त्रि१. त्रि३. पा. हा – 'न' नास्ति। ९०. म३ – 'दर्शपूर्ण°' इत्यस्य पूर्वं 'ननु', आ. पा – दर्शपूर्णमासयोरप्यग्नि°। ९१. आ – नैवम्। ९२. त्रि२. ब – 'एव' नास्ति। ९३. आ. इ. उ. पा – स्वाग्नियोनिद्वारा; मै१ – स्वाग्निद्वारा।

देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः

देवभागमिति देव–भागम्। ऊर्जस्वतीः। पयस्वतीः।

प्रजावतीरिति प्रजा-वतीः। अनमीवाः। अयक्ष्माः। मा। वः।

अथ प्रस्थाप्यमाना गा एव प्रार्थयते द्वितीयया। [58]इयं च मध्यवसुकहेशपाठात् मध्येज्योतिस्त्रिष्टुप्[58]॥ हे [4]अघ्नियाः गावः [59]अहननार्हाः। अहननम् अघ्नः। "घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्" (पा ३.३.५८ वा ४) इति हन्तेः कः। अघ्नमर्हन्तीति "छन्दसि च" (पा ५.१.६७) इति [60]यः। यद्वा—"अघ्न्यादयश्च" (उ ४.११२) इति यक्प्रत्ययान्तो निपात्यते। [61]इकारश्छान्दसः। तदा गवामियं संज्ञा। सर्वदा प्रत्ययोदात्तत्वम्। इह तु आष्टमिकम् "आमन्त्रितस्य च" (पा ८.१.१९) इति सर्वानुदात्तत्वम्। [4]देवभागं[62] देवस्येन्द्रस्य भागं सांनाय्यलक्षणं [63]यूयम् [4]आप्यायध्वम् आप्याययत। अन्तर्भावितण्यर्थात्, प्यायतेर्व्यत्ययेन लोट्। "बहुलमन्यत्रापि संज्ञाछन्दसोः" (उ १९०) इति णेर्लुक्। अण्यन्तस्याचित्तवत्कर्तृकात् "अणावकर्मकात्" (पा १.३.८८) इति परस्मैपदाभावः। "ऐन्द्रं दध्यमावास्यायाम्" (तैसं २.५.४) इति सांनाय्यस्यैन्द्रत्वम्। "वत्सेभ्यश्च वै" (तैब्रा ३.२.१) इत्यादि ब्राह्मणम्[63]। ऊर्जस्वत्त्वादिगुणयुक्ता यूयमाप्यायध्वम्। यद्वा—ऊर्जस्वत्त्वादिगुणयुक्तान् [4]वः[64] युष्मान् [4]स्तेनः [4]मा [4]ईशत इति। शेषत्वाविवक्षायां "अधीगर्थ°" (पा २.३.५२) इति षष्ठ्यभावः। प्रथमपक्षे "आप्यायन्ते। देवेभ्य एवैना इन्द्रायाऽऽप्याययति" (तैब्रा ३.२.१) इति। वत्सार्थमघ्न्याः पूर्वं गोग्रासेन वत्सभागो मनुष्यभागश्च प्रवृद्धो भवति। ऊर्ध्वं तु क्षीराभावरूपो [189]देवान्तरभागो वर्धितव्य इन्द्रभागश्च प्रवर्धते। [190]एवकारेण मनुष्य[191]व्यावृत्तिः[190]। द्वितीयं भागमनुवदति—"ऊर्जस्वतीः पयस्वतीरित्याह। ऊर्जं हि पयः संभरन्ति" (तैब्रा ३.२.१) इति। प्रभूत[illegible] रसाधिक्यसंपादनं क्षीराधिक्यसंपादनं च लौकिकदोहे प्रसिद्धमिति [illegible]। तृतीयभागस्य प्रयोजनमाह— "प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै" (तैब्रा ३.२.१) इति। [191]वन्ध्यात्वे क्रिमिदोषे रोगान्तरे[191] च नास्ति प्रजोत्पत्तिः। तदभावे तु विद्यते। चतुर्थभागस्य

५८–५८. तं२ – 'इयं ... त्रिष्टुप्' नास्ति। ५९. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४– 'अहननार्हाः' नास्ति। ६०. मै. मै१. मै३ – यप्रत्ययः। ६१. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – 'इकारश्छान्दसः' नास्ति। ६२. मै. मै१. मै३ – 'देवभागम्' नास्ति। ६३–६३. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ –' यूयं...ब्राह्मणम्' नास्ति। ६४. मै. मै१. मै३. मै४ –' वः ' नास्ति।

१८९. गो – देवभागः; तं. मै१ – देवतान्तरभागः। १९०–१९०. मा. हा – दैवतीकरणे मनुष्यो निवर्तते; इ. उ – दैवतीकरणे मानुष्यो निवर्तते; तं. त्रि१. म१. म३ – एवकारेण मनुष्यव्यावृत्तिः। १९१–१९१. आ. हा – वन्ध्यात्वेन क्रिमिदोषेण रोगान्तरेण।

स्तेन ईशत माऽघशंसो रुद्रस्य हेतिः परि वो वृणक्तु

स्तेनः । ईशत । मा । अघशंस इत्यघ–शंसः । रुद्रस्य । हेतिः । परीति । वः । वृणक्तु ।

छन्दसि " (पा ६·१·१०६) इति पूर्वसवर्णदीर्घः[65]। ऊर्जस्वत्यो बलवत्यः [66]बहुरसा वा। पयस्वत्यः बहुपयस्काः। असुन्नन्तस्य [67]आद्युदात्तत्वम्। मतुप्ङीपोरनुदात्तत्वम्। प्रजावत्यः बहुपत्याः। "उपसर्गे च संज्ञायाम्" (पा ३·२·९९) इति डप्रत्ययस्योदात्तत्वात् कृदुत्तरपदप्रकृतिस्वरत्वे[68] प्रजाशब्दः अन्तोदात्तः। [69-69]अनमीवाः अरोगाः। "शेवयह्वजिह्वाग्रीवाप्वामीवाः" (उ १६०) इति वन्प्रत्ययान्तो मिनोतेरम्पूर्वस्यामीवशब्दो निपातितः। अमीवा उदरव्याधिः। तद्रहिता अनमीवाः[69]। [69]अयक्ष्माः, यक्ष्मा व्याधिः तद्रहिताः। पृथगुपादानं प्राधान्यात्। "डाबुभाभ्यामन्यतरस्याम्" (पा ४·१·१३) इति [70]बहुव्रीहेः डाप्[71]। उभयत्र "नञ्सुभ्याम्" (पा ६·२·१७२) इति [72]बहुव्रीहौ (पा ६·२·१६२) उच्यमानम् उत्तरपदान्तोदात्तत्वम्। स्तेनः, [73]स्तेन चौर्ये इति चुरादेरच्[73], अपहर्ता मा युष्माकम् ईशत [74]ईशिष्ट स्ववशान्[75] युष्मान् मा कार्षीत्। व्यत्ययेन च्लेरङादेशः। [76]किंच – [v]अघशंसः अपि युष्मान् मा ईशिष्ट, मा वो जिघांसीत्। अघे पापे [77]वधलक्षणे शंसा अभिलाषो यस्य सः[78] पापतत्परः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अघशब्दोऽयमन्तोदात्तोऽप्यस्ति, यथा– "अपं नः शोशुचदघम्" (तैआ ६·११) इति। [79]अघते गच्छति दानादिना। आगमशास्त्रस्य अनित्यत्वात् (व्याडिपरिभाषा७६) न नुम्। पचादित्वादच् (पा ३·१·१३४)। प्रत्ययस्वरेणान्तोदात्तत्वम्॥

प्रयोजनमाह– "मा वः स्तेन ईशत माऽघशंस इत्याह गुप्त्यै" (तैब्रा ३. २. १) इति। चोरव्याघ्रादेररक्षिता गावो रक्षिता भवन्ति॥ तृतीयमन्त्रस्यायमर्थः–रुद्रनामकस्य क्रूरदेवस्याऽऽयुधं युष्मान् परिहरत्विति॥ एतन्मन्त्रपाठफलमाह– "रुद्रस्य हेतिः परि वो वृणक्त्वित्याह। रुद्रादेवैनास्त्रायते" (तैब्रा ३. २. १) इति॥

६५. म – °दीर्घत्वम्। ६६. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – 'बहुरसा वा' नास्ति। ६७. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – आद्युदात्तत्वे। ६८. मै. मै१. मै२– °स्वरेण। ६९–६९. तं१. तं२. तं३. पं – उदरस्थाः कृमयः तद्रहिताः; ति. ब. म. म१. मै४ – अनमीवाः, अमीवाः उदरस्थाः कृमयः तद्रहिताः। ७०. मै. मै२ – 'बहुव्रीहेः' नास्ति। ७१. मै – डापि। ७२. मै. मै१ – 'बहुव्रीहौ' नास्ति। ७३–७३. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – 'स्तेन चौर्ये इति चुरादेरच्' नास्ति। ७४. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४– 'ईशिष्ट' नास्ति। ७५. म. मै. मै१. मै२ – स्ववशाः। ७६. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – 'किंच' नास्ति। ७७. मै. मै१. मै२ – भक्षणलक्षणे। ७८. मै. मै१. मै२ – नियोगेन सोऽघशंसः। ७९–७९. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – 'अघ्यते...अघ' नास्ति।

ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ १ ॥

[ इति त्रिचत्वारिंशत् ]

ध्रुवाः । अस्मिन् । गोपताविति गो-पतौ । स्यात । बह्वीः । यजमानस्य । पशून् । पाहि ॥ १ ॥

[ मैसं १·१·१; काठसं १·१; कपिसं १·१; वासं १·१ ]

अथ[80] न केवलं मनुष्य[80] एव, अपि तु[80] देवोऽपि युष्मान् मा हिंसीत् इति तृतीयया[81]आशास्ते–' रुद्रस्य ' इति ॥ इयं चैकपदा त्रिष्टुप्, " एकद्वित्रिचतुष्पादुक्तपादम्[82] " ( पिसू ३·७ ) इति वचनात् । हेतिः आयुधम् । [83] " ऊतियूति[83] " ( पा ३·३·९७ ) इत्यादिना क्तिन्नन्तोऽन्तोदात्तो निपातितः । सा [v]रुद्रस्य [v]हेतिः युष्मान् [v]परि [v]वृणक्तु सर्वतो वर्जयतु[83] ॥

यजमानं ध्यायति [84]ईक्षते वा[84]–' ध्रुवा ' इत्यृचा त्रिष्टुभैकपदया ॥ [85]गवां पतिर्गोपतिः यजमानः[85] । " पत्यावैश्वर्ये " ( पा ६·२·१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । [v]अस्मिन् यजमाने [v]ध्रुवाः अविनाशाः [v]स्यात भवत, बह्वयश्च संतानवृद्ध्या भवत । " वा छन्दसि " ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घत्वम् ॥

ध्रुवेति ॥ बौधायनः–" ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमानमीक्षते " ( बौश्रौ १·१ ) इति । आपस्तम्बः – " ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते " ( आपश्रौ १. २. ९ ) इति ॥ हे गावः, भवत्यो अस्मत्स्वामिनि यजमाने स्थिरा भवत, [192]न तु प्रीतिदानापहारादिभिः यजमानं परित्यजत[192], अपत्यपरंपरया बह्व्यश्च भवत ॥ एतन्मन्त्रपाठं प्रशंसति– " ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरित्याह ध्रुवा एवास्मिन् बह्वीः करोति " ( तैब्रा ३. २. १ ) इति ॥

यजमानस्येति ॥ बौधायनः–" अथैतां शाखामग्रेणाऽऽहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य अपरेण गार्हपत्यमभिहेऽभ्युत्तरार्धे वाऽग्न्यागारस्यावगूहति यजमानस्य पशून् पाहीति " ( बौश्रौ

८०–८०. तं१. तं२. तं३. ति. पं. ब. म. म१. मै४ – ' एव, अपि तु ' नास्ति । ८१. तं१. तं२. तं३. ति. पं. म. म१. मै४ – अनुशास्ति । ८२. ति. ब. म. म१. मै४ – °चतुष्पादुक्तम् । [ ' °चतुष्पादुक्तपादम् ' इति पिङ्गलीयच्छन्दःसूत्रे । ] ८३–८३. तं१. तं२. तं३. ति. पं. म. म१ – रुद्रस्य आयुधं युष्मान् परिवृणक्तु सर्वतो परिवर्जयतु । परिवर्जनार्थः । ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति क्तिजन्तोऽन्तोदात्तो निपातितः । ८४–८४. तं१. तं२. तं३. ति. पं. ब. म – ' ईक्षते वा ' नास्ति । ८५–८५. तं१. तं२. तं३. ति. पं. ब. म. म१ – गोपतौ गवां पतौ यजमाने; मै४ – गवां पतौ यजमाने ।

१९२–१९२. आ. पा – प्रीतिदानापहारादिभिर्यजमानं मा त्यजत; तं. बि१. बि३. ब. म१. म३ – न तु प्रीतिदानापहारात्ययुद्धादिना यजमानं परित्यजत; मो. मै१ – न तु प्रतिदानापहारात्ययुद्धि- र्यजमानं परित्यजत ।

शाखाहरणादिः ]

[८६]शाखामुद्गृह्णन् — 'यजमानस्य' इति ॥ हे शाखे यजमानस्य पशून् पाहि रक्ष । [८७]"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" (पा ६.१.१८६) इति[८७] लसार्वधातुकानुदात्तत्वे यजमाने धातुस्वरः । "तस्मात् सायं पशवः" (तैब्रा ३.२.१) इत्यादि ब्राह्मणम् ॥ १ ॥

॥ इति प्रथमोऽनुवाकः ॥

१. १.) इति । आपस्तम्बः — "यजमानस्य पशून् पाहीत्यग्निहोत्रेऽग्न्यगारे वा पुरस्तात् प्रतीचीं शाखामुपगूहति पश्चात् प्राचीं वा" (आपश्रौ १. २. १०) इति ॥ अग्निहम् अनो व्रीहि-रूपस्य हविषो [१९३]धारकं शकटम् ॥ मन्त्रपाठप्रयोजनमाह — "यजमानस्य पशून् पाहीत्याह । पशूनां गोपीथाय । तस्मात् सायं पशव उपसमावर्तन्ते" (तैब्रा ३. २. १) इति । गोपीथो रक्षणम् । तस्माच्छाखाया रक्षितत्वात् शाखाया भूमौ स्थापनं [१९४]निवार्यते । निवारणं तत्फलं[१९४] चाऽऽह — "अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः" (तैब्रा ३. २. १) इति । उपर्यवस्थापनं तत्फलं चाऽऽह — "उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै" (तैब्रा ३. २. १) इति । इवशब्द एवकारार्थः । समष्टिः सम्यग्व्याप्तिः ॥

अस्मिन्ननुवाके स्थितानां मन्त्राणां विनियोगः संगृह्यते —

"इषे शाखां छिनत्त्यूर्जे [१९५]मार्ष्टि वायवेति[१९५] वत्सकान् ।
अपाकृत्याय देवो वः प्रस्थाप्याऽऽप्यायेति [१९६]गाः स्पृशेत् ॥ १ ॥
ध्रुवेत्यभिमन्त्र्यैता ध्रुवेति गृहमाव्रजेत् ।
यजेति शाखोपगूह इत्यष्टावनुवाकगाः" ॥ २ ॥ इति ॥

सुगमत्वं ब्राह्मणं च [१९७]विबोधार्थमुदाहृतम् ।
संदेहस्याऽपनुत्त्यर्थं मीमांसाऽत्र वर्ण्यते ॥

लोके न्यायद्वारेण संदेहनिवृत्तिः प्रसिद्धा । वेदेऽपि तत्र तत्र [१९८]तत्त्वविचारपूर्वकं संदेहापनयन-मुपक्रमामहे । तथा हि — अग्न्युपस्थानविषयो[१९९] विचारः प्रथमकाण्डे पञ्चमप्रपाठके नवमेऽनुवाके श्रूयते — "उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" (तैसं १. ५. ९) इति । अस्यायमर्थः — प्रतिदिनं सायं प्रातरग्निहोत्रमनुष्ठाय "उप प्रयन्तो अध्वरम्" (तैसं १. ५. ५) इत्यादिभिः

८६. मै. मै१. मै२ – शाखामुपगूहति । ८७–८७. तं. ति. ब. म. म१. मै४ – °अदुपदेशात् ।

१९३. आ. इ. उ. पा. हा – वाहकम् । १९४–१९४. अ. अ१. गो. तं. त्रि१. त्रि२. त्रि३. म१. म३. मै१ – निवार्य तन्निवारणफलम् । १९५–१९५. इ. उ. पा. हा – °त्यनुमार्ष्टि च; म३ – मार्ष्टि वायव; त्रि१ – मार्ष्टि वायवेति । १९६. आ. इ. उ. त्रि१ – गाः । १९७. म३ – विभागार्थम् । १९८. अ. अ१. गो. तं. त्रि१. त्रि२. ब. म१. म३. मै१ – 'तत्त्व°' नास्ति । १९९. आ. पा. हा – °विषये विवादे; क – °विषयविवादे ।

